॥ श्रीअङ्गारकाष्टोत्तरशतनामस्तोत्रम् ॥

मङ्गल बीज मन्त्र - ॐ क्राँ क्रीं क्रौं सः भौमाय नमः ॥

महीसुतो महाभागो मंगळो मंगळप्रदः ।
महावीरो महाशूरो महाबलपराक्रमः ॥ १॥

महारौद्रो महाभद्रो माननीयो दयाकरः ।
मानजोऽमर्षणः क्रूरः तापपापविवर्जितः ॥ २॥

सुप्रतीपः सुताम्राक्षः सुब्रह्मण्यः सुखप्रदः ।
वक्रस्तम्भादिगमनो वरेण्यो वरदः सुखी ॥ ३॥

वीरभद्रो विरूपाक्षो विदूरस्थो विभावसुः ।
नक्षत्रचक्रसञ्चारी क्षत्रपः क्षात्रवर्जितः ॥ ४॥

क्षयवृद्धिविनिर्मुक्तः क्षमायुक्तो विचक्षणः ।
अक्षीणफलदः चक्षुर्गोचरष्षुभलक्षणः ॥ ५॥

वीतरागो वीतभयो विज्वरो विश्वकारणः ।
नक्षत्रराशिसञ्चारो नानाभयनिकृन्तनः ॥ ६॥

कमनीयो दयासारः कनत्कनकभूषणः ।
भयघ्नो भव्यफलदो भक्ताभयवरप्रदः ॥ ७॥

शत्रुहन्ता शमोपेतः शरणागतपोषकः ।
साहसः सद्गुणाध्यक्षः साधुः समरदुर्जयः ॥ ८॥

दुष्टदूरः शिष्टपूज्यः सर्वकष्टनिवारकः ।
दुश्चेष्टवारको दुःखभञ्जनो दुर्धरो हरिः ॥ ९॥

दुःस्वप्नहन्ता दुर्धर्षो दुष्टगर्वविमोचकः ।
भरद्वाजकुलोद्भूतो भूसुतो भव्यभूषणः ॥ १०॥

रक्ताम्बरो रक्तवपुर्भक्तपालनतत्परः ।
चतुर्भुजो गदाधारी मेषवाहो मिताशनः ॥ ११॥

शक्तिशूलधरश्शक्तः शस्त्रविद्याविशारदः ।

तार्किकः तामसाधारः तपस्वी ताम्रलोचनः ॥ १२॥

तप्तकाञ्चनसंकाशो रक्तकिञ्जल्कसन्निभः ।
गोत्राधिदेवो गोमध्यचरो गुणविभूषणः ॥ १३॥

असृजंगारकोऽवन्तीदेशाधीशो जनार्दनः ।
सूर्ययाम्यप्रदेशस्थो यावनो याम्यदिऽग्मुखः ॥ १४॥

त्रिकोणमण्डलगतो त्रिदशाधिपसन्नुतः ।
शुचिः शुचिकरः शूरो शुचिवश्यः शुभावहः ॥ १५॥

मेषवृश्चिकराशीशो मेधावी मितभाषणः ।
सुखप्रदः सुरूपाक्षः सर्वाभीष्टफलप्रदः ॥ १६॥

॥ इति मङ्गल एवं अङ्गारकाष्टोत्तरशतनामस्तोत्रम् सम्पूर्णम् ॥